श्रीः

श्रीवेदगर्भ पद्मनाभसूरिविरचितः

# पदार्थसङ्ग्रहः

2009

*Published by*

**Dvaita Vedanta Studies and Research Foundation**

No.11, Uttaradi Matha Compound,

Basavanagudi, Bangalore-4.

*Copies can be had from :*

Dvaita Vedanta Studies and Research Foundation,

No.11, Uttaradi Matha Compound,

Basavanagudi, Bangalore-560 004.

Phone : 080-2662 7272

# पदार्थसङ्ग्रहविषयानुक्रमणिका

---

સમરીતિર્નંદાતેજા: પરબ્રહ્મ સનાતન:।
જયતાજ્જાનકીનાથો વેદવેદ્યો ગદાગતિ: ॥
ankurnagpal108@gmail.com.

श्रीवेदगर्भ पद्मनाभसूरिविरचितः

# पदार्थसङ्ग्रहः

लक्ष्मीपतिं सम्प्रणम्य सर्वज्ञादिगुरूनपि ।
पदार्थानां सङ्ग्रहोऽयं क्रियते शास्त्रतोऽञ्जसा ॥ १ ॥

## I. पदार्थसामान्यप्रकरणम्

तत्र द्रव्यगुणकर्मसामान्यविशेषविशिष्टांशिशक्तिसादृश्याभावा दश पदार्थाः ॥

### द्रव्यविभागप्रकरणम् – १

तत्र द्रव्याणि । परमात्मलक्ष्मीजीवाव्याकृताकाशप्रकृतिगुणत्रय महत्तत्त्वाहङ्कारतत्त्वबुद्धिमनइन्द्रियमात्राभूतब्रह्माण्डाविद्यावर्णान्धकार-वासनाकालप्रतिबिम्बभेदाद्विंशतिरेव ॥

### गुणविभागप्रकरणम् – २

रूपरसगन्धस्पर्शसङ्ख्यापरिमाणसंयोगविभागपरत्वापरत्वद्रवत्वगुरुत्व-लघुत्वमृदुत्वकाठिन्यस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्म-संस्कारालोकशमदमकृपातितिक्षाबलभयलज्जागाम्भीर्यसौन्दर्य-स्थैर्यशौर्यौदार्यसौभाग्यप्रभृतयोऽनेके गुणाः ॥

### कर्मप्रकरणम् – ३

विहितनिषिद्धोदासीनभेदेन त्रिविधं कर्म । विहितमपि

काम्याकाम्यभेदेन द्विविधम् । तच्च ब्रह्मादिसर्वजीवानाम् । लक्ष्मीनारायणयोस्तु लीलया मोहनाय वा । निषिद्धं कर्म रुद्रादीनाम् । उदासीनं कर्म तु परिस्पन्दः । स चोत्क्षेपणापक्षेपणाकुञ्चनप्रसरणगमनागमनभ्रमणवमनवपनभोजनविदारणाद्यनेकविधः । यथायोगं चेतनाचेतनयोर्धर्मः । पुनर्द्विविधः नित्योऽनित्यश्च । नित्य ईश्वरादिचेतनस्वरूपभूतः । अनित्योऽनित्यगतः ॥

## सामान्यप्रकरणम् – ४

नित्यमनित्यं चेति सामान्यं द्विविधम् । प्रतिव्यक्त्यननुगतम् । पुनर्द्विविधम् । जातिरुपाधिश्चेति । जीवत्वादियावद्वस्तुभावि नित्यम् । ब्राह्मणत्वमनुष्यत्वाद्ययावद्वस्तुभाव्यनित्यम् । सर्वज्ञत्वप्रमेयत्वाद्युपाधिरपि तद्वत् ॥

## विशेषप्रकरणम् – ५

भेदाभावेऽपि भेदव्यवहारनिर्वाहका अनन्ता एव विशेषाः । सर्वपदार्थनिष्ठाः । स्वनिर्वाहकाश्च । ते द्विविधाः । नित्या अनित्याश्च । नित्या ईश्वरादिनित्यद्रव्यगताः । घटाद्यनित्यद्रव्यगता अनित्याः ॥

## समवायनिराकरणप्रकरणम्

समवायस्तु स्वरूपत एव नास्ति ॥

## विशिष्टप्रकरणम् – ६

विशेषणसम्बन्धेन विशेष्यस्य य आकारस्तद्विशिष्टम् । तद्विविधम्। नित्यमनित्यं च । नित्यं सार्वज्ञादिविशिष्टं परब्रह्मादि। द्वितीयं दण्डादिविशेषणसम्बन्धेन परिणतं दण्ड्यादि ॥

## अंशिप्रकरणम् – ७

अंशी तु हस्तवितस्त्याद्यतिरिक्तः पटादिर्गगनादिश्चानुभवसिद्धः ।

## शक्तिप्रकरणम् – ८

शक्तिश्चतुर्विधा । अचिन्त्यशक्तिराधयेशक्तिस्सहजशक्तिः पदशक्तिश्चेति । तत्राचिन्त्यशक्तिः परमेश्वरे सम्पूर्णा । अन्यत्र यथायोग्या ।

कार्यमात्रानुकूला स्वभावरूपा सहजशक्तिः । सर्वपदार्थनिष्ठा । नित्यानित्यभेदेन द्विविधा । नित्यगता नित्या । अनित्यगताऽनित्या ॥

अन्याहितशक्तिराधेयशक्तिः । सा च प्रतिष्ठादिना प्रतिमादौ ॥

पदपदार्थयोर्वाच्यवाचकभावसम्बन्धः पदशक्तिः । सा च स्वरध्वनिवर्णपदवाक्यमात्रगता । मुख्या परममुख्या चेति द्विविधा । सर्वशब्दानां परमात्मनि परममुख्यवृत्तिः । अन्यत्र मुख्यवृत्तिः ॥

## सादृश्यप्रकरणम् – ९

सादृश्यं च पदार्थान्तरम् । न तु तद्भिन्नत्वे सति तद्गतभूयो-धर्मवत्त्वम् । यमलादिषु नाना । एकनिरूपितमपरवृत्ति । न त्वनुगतम् । तद्द्विविधम् ॥ नित्यमनित्यं चेति । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ॥

## अभावप्रकरणम् – १०

अभावश्चतुर्विधः । प्रागभावः प्रध्वंसाभावोऽन्योन्याभावोऽत्यन्ताभावश्चेति । कार्योत्पत्तेः प्राग्विद्यमानोऽभावः प्रागभावः । महदादिकार्यमात्रस्य । उत्पत्त्यनन्तरमेव विद्यमानोऽभावः प्रध्वंसः । सोऽपि कार्यमात्रस्य ॥

सार्वकालिकोऽभावोऽन्योन्याभावः । पदार्थस्वरूपमेव । नित्यात्मको नित्यः । अनित्यात्मकोऽनित्यः । भावाभावाऽसत्प्रतियोगिकश्च ॥

अप्रामाणिकप्रतियोगिकाभावोऽत्यन्ताभावः । न तु प्रामाणिक-प्रतियोगिकः । स च नित्यः । घटाद्यभावस्तु यथायथं प्राग-भावादिरूप एव ॥

॥ इति श्रीवेदगर्भकुलीनपद्मनाभसूरिविरचिते पदार्थसङ्ग्रहे
पदार्थनिरूपणं समाप्तम् ॥

## II. द्रव्यप्रकरणम्

द्रवणप्राप्यत्वं द्रव्यसामान्यलक्षणम् । द्रवणं च गमनम् । उपादानकारणत्वं वा द्रव्यत्वम् । उपादानत्वं च परिणामोऽभि-व्यक्तिश्चेति द्विविधम् ॥

### परमात्मप्रकरणम् – १

तत्र परमात्माऽनन्तगुणपरिपूर्णः । सृष्ट्याद्यष्टकर्ता । सर्वज्ञः । परममुख्यया वृत्त्या सकलशब्दवाच्यः । जडजीवप्रकृति-भ्योऽत्यन्तविलक्षणः । ज्ञानानन्दाद्यात्मककल्याणविग्रहवान् । सर्वस्वतन्त्रः । एक एव । नानारूपः । सर्वाण्यपि रूपाणि पूर्णानि । स्वरूपगुणावयवक्रियादिभिरत्यन्ताभिन्नः ॥

### लक्ष्मीप्रकरणम् – २

परमात्मभिन्ना तन्मात्राधीना लक्ष्मीः । परमात्मवन्नित्यमुक्ता तद्भार्या नानारूपा । परमात्मवज्जडदेहरहिता । तद्वत्सर्वशब्द-वाच्या । देशकालाभ्यामेव परमात्मना समव्याप्ता ॥

### जीवप्रकरणम् – ३

अज्ञानादिदोषयुक्ताः संसारिणो जीवाः । असङ्ख्याकाः । गणशोऽप्यनन्ताः । ते च त्रिविधाः । मुक्तियोग्या नित्य-संसारिणस्तमोयोग्याश्चेति ॥

तत्र मुक्तियोग्याः पञ्चविधाः । देवर्षिपितृचक्रवर्तिमनुष्योत्तम-

भेदात् । ब्रह्मवाय्वादयो देवाः । ऋषयो नारदाद्याः । पितरश्चिराः । रघ्वम्बरीषादयश्चक्रवर्तिनः । मनुष्योत्तमास्तु द्विविधाः ॥

चतुर्गुणोपासका एकगुणोपासकाश्चेति । तृणजीवा एकगुणोपासकाः । तद्व्यतिरिक्ताश्चतुर्गुणोपासकाः । नित्यं सुखदुःखमिश्राः नित्यसंसारिणः । ते च मध्यममनुष्या एवासङ्ख्याताः । सर्वदा स्वर्गभूनिरयचारिणः । तमोयोग्यास्तु चतुर्विधाः । दैत्या राक्षसाः पिशाचा मनुष्याधमाश्चेति । सर्वेऽपि जीवाः परस्परं परमात्मना च भिन्नाः । संसारे मुक्तौ च तारतम्योपेताः । जीवाभिमानिनो ब्रह्मादयः ॥

## अव्याकृताकाशप्रकरणम् – ४

सृष्टिप्रलययोर्विकारशून्या दिगव्याकृताकाशम् । भूताकाशभिन्नम्। एकं नित्यं व्याप्तं स्वगतं वा । प्राच्यादिस्वाभाविकावयवोपेतं च । तदभावे मूर्तं निबिडं जगत्स्यात् । लक्ष्मीस्तस्याभिमानिनी ।

## मूलप्रकृतिप्रकरणम् – ५

साक्षात्परम्परया वा विश्वोपादानं प्रकृतिः । जडरूपा । नित्या व्याप्ता च । तदभिमानिनी रमा । सर्वजीवलिङ्गशरीररूपा । तद्भिन्ना चेत्यनेकविधा ।

## गुणत्रयप्रकरणम् – ६

सत्त्वरजस्तमोनामकानां गुणानां समुदायो गुणत्रयम् ।

सृष्टिकाले मूलप्रकृतेस्सकाशात्परमात्मना त्रेधा भिन्नम् । महदादिजगदुपादानम् । तमोगुणापेक्षया रजोगुणो द्विगुण-परिमाणयुक्तः । रजोगुणापेक्षया सत्त्वगुणो द्विगुणपरिमाण-युक्तः । सत्त्वरजोभ्यां मिश्रं च तमः । तमस्सत्त्वाभ्यां मिश्रं च रजः । सत्त्वं तु शुद्धमेव । तत्र शुद्धसत्त्वं मुक्तानां लीला-विग्रहाय भवति । रजोगुणेन सृष्टिः । रजोगुणस्थसत्त्वेन स्थितिः । तमोगुणेन विनाशः । सत्त्वाभिमानिनी श्रीः । रजोभिमानिनी भूः । तमोभिमानिनी दुर्गा रमैव । ब्रह्मादयोऽपि गुणत्रयाभिमानिनः ॥

## महत्तत्त्वप्रकरणम् – ७

साक्षाद्गुणत्रयोपादानकं महत्तत्त्वम् । तमोगुणापेक्षया दशगुण-परिमाणन्यूनम् । ब्रह्मवायू तत्स्त्रियौ च तदभिमानिनः ।

## अहङ्कारतत्त्वप्रकरणम् – ८

महत्तत्वोपादानकमहङ्कारतत्वम् । वैकारिकतैजसतामसभेदेन त्रिविधम् । महत्तत्वाद्दशांशन्यूनम् । गरुडशेषरुद्रादय-स्तदभिमानिनः ।

## बुद्धितत्त्वप्रकरणम् – ९

बुद्धिर्द्विविधा । तत्त्वरूपा ज्ञानरूपा चेति । तत्र तत्त्वरूपा द्रव्यम् । तत्त्वरूपा महत्तत्त्वजन्या । तैजसाहङ्कारेणोपचिता । ज्ञानरूपा बुद्धिर्ज्ञानप्रकरणे वक्ष्यते । ब्रह्माद्युमान्तास्तदभिमानिनः ।

## मनस्तत्त्वप्रकरणम् – १०

मनो द्विविधं तत्त्वरूपं तद्भिन्नं चेति । वैकारिकाहङ्कारोपादानकं मनस्तत्त्वम् । पूर्वोक्तदेवता इन्द्रकामानिरुद्धाश्च तदभिमानिनः ।

तत्त्वभिन्नं मन इन्द्रियम् । तद्द्विविधम् । नित्यमनित्यं चेति । नित्येन्द्रियमीशलक्ष्मीब्रह्मादिसर्वजीवानां स्वरूपभूतम् । अनित्येन्द्रियं ब्रह्मादिसर्वजीवानां बाह्यम् । तत्पञ्चविधम् । मनोबुद्धिरहङ्कारश्चित्तं चेतनेति ।

## इन्द्रियतत्त्वप्रकरणम् – ११

इन्द्रियाण्यपि द्विविधानि । तत्त्वभूतानि तत्त्वभिन्नानि चेति । पुनर्द्विविधानि । ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चेति । घ्राणरसनचक्षुःश्रोत्रत्वग्रूपाणि ज्ञानेन्द्रियाणि पञ्च । वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि पञ्च । नित्यानित्यभेदेन पुनर्द्विविधानि । तत्र तत्त्वरूपाण्यनित्यानि ज्ञानकर्मेन्द्रियाणि तैजसाहङ्कारोपादानकानि ।

तत्त्वभिन्नानि नित्यानि ज्ञानकर्मेन्द्रियाणीशलक्ष्मीसर्वजीवानां स्वरूपभूतानि । तानि साक्षीत्युच्यन्ते । ईशलक्ष्म्योर्दशेन्द्रियाण्यपि प्रत्येकं गन्धादिसर्वपदार्थविषयकाणि । मुक्तानाममुक्तानां च ब्रह्मादीनामिन्द्रियाणि तत्तद्योग्यपदार्थविषयकाणि ॥

अनित्यानि तत्त्वभिन्नानि दशेन्द्रियाणि ब्रह्मादिसर्वजीवानाम् । ब्रह्मादयः सूर्यादयश्च तदभिमानिनः । संसारावस्थायामपि साक्षि-

स्वरूपेन्द्रियस्यात्मा मनस्तद्धर्माः सुखदुःखादयोऽविद्या कालोऽव्याकृताकाशश्च साक्षादेव विषयाः । बाह्येन्द्रियद्वारा शब्दादयोऽपि साक्षिविषयाः । ज्ञाततयाऽज्ञाततया सर्वेप्यतीन्द्रियाः साक्षिविषयाः । साक्ष्यनङ्गीकारे कालाकाशाद्यसिद्धिप्रसङ्गात् ।

## पञ्चतन्मात्राप्रकरणम् – १२

मीयंत इति मात्राः शब्दस्पर्शरूपरसगन्धाः पञ्च विषयाः । ता द्विविधाः । तत्त्वरूपास्तद्भिन्नाश्चेति । तत्त्वरूपास्तामसाहङ्कारजन्याः पञ्चतन्मात्रा इत्युच्यन्ते । तत्त्वभिन्ना मात्रा गुणास्तत्प्रकरणे निरूप्यन्ते । उमासुपर्णीवारुण्यो बृहस्पत्याद्याश्च तदभिमानिनः ॥

## पञ्चभूतप्रकरणम् - १३

तद्द्वारा तामसाहङ्कारजन्यानि पञ्चभूतानि । आकाशवायुतेजोऽप्पृथिव्यः । तानि द्विविधानि । तत्त्वभूतानि तद्भिन्नानि चेति ।

### (१) आकाशप्रकरणम्

तत्र शब्दादाकाशोत्पत्तिः । तदभिमानी विनायकः । अहङ्कारतत्त्वाद्दशगुणन्यूनमाकाशम् ।

### (२) वायुप्रकरणम्

वायुर्द्विविधः । प्राणापानादिरूपस्तद्भिन्नश्चेति । पुनर्द्विविधः । नित्योऽनित्यश्च । नित्यः प्राणादिरीशलक्ष्म्योर्मुक्तानां च स्वरूपभूतः । अनित्यस्तत्वभिन्नः संसारिणाम् ॥

तत्त्वरूपो वायुः स्पर्शजन्यः । वाय्वादिदेवास्तदभिमानिनः । आकाशाद्दशगुणन्यूनः ॥

## (३) तेजःप्रकरणम्

तेजो द्विविधम् । तत्त्वरूपं तद्भिन्नं चेति । नित्यानित्यभेदेन पुनर्द्विविधम् । नित्यं तेज ईशलक्ष्म्योर्मुक्तानां च स्वरूपभूतम् ॥ तत्त्वरूपं तेजो रूपतन्मात्राजन्यमनित्यं च । वायुतत्त्वाद्दश-गुणन्यूनम् । ब्रह्मादयो देवास्तदभिमानिनः ।

## (४) अप्प्रकरणम्

आपो द्विविधाः । तत्त्वभूतास्तद्भिन्नाश्चेति । पुनर्द्विविधा नित्या अनित्याश्च । तत्त्वभूता आपो रसजन्याः । तत्त्वभिन्ना आपोऽनित्याः । ईशलक्ष्मीमुक्तस्वरूपभूताः । ब्रह्मादयो देवा अबभिमानिनः । तेजसो दशगुणन्यूनाः ।

## (५) पृथिवीप्रकरणम्

पृथिवी द्विविधा तत्त्वाऽतत्त्वभेदात् । पुनर्द्विविधा नित्याऽनित्या चेति । अनित्या तत्त्वरूपा पृथिवी गन्धजन्या । नित्या तत्त्वभिन्ना ईशलक्ष्मीमुक्तस्वरूपभूता । ब्रह्मादयो धरा च तदभिमानिनः । अद्भिर्दशांशन्यूना । ब्रह्माण्डाद्द्विगुणपरिमाणा । अव्यक्तमारभ्य पृथिवीतत्त्वपर्यन्तानि ब्रह्माण्डाद्बाह्यानि तदा-वरणानि । तत्त्वभिन्नान्याकाशादिपञ्चभूतानि ब्रह्माण्डान्तर्गतानि परमात्मजन्यानि ।

महदाद्यनङ्गीकारे ब्रह्माण्डोत्पत्तिर्न स्यात् । तत्तद्देवानामंशिनामवस्थानानि न स्युः । तत्तत्तत्त्वपर्यन्तव्याप्तभगवद्रूपापरोक्षज्ञानं च देवानां न स्यात् । तत्तत्प्रतिपादकप्रमाणविरोधश्च स्यात् ।

## ब्रह्माण्डप्रकरणम् – १४

एतैस्तत्त्वैर्विष्णुर्वीर्यात्मना परिणाम्य ब्रह्माण्डमसृजत् ।

तच्च पञ्चाशत्कोटिविस्तीर्णम् । एकमेव कपालद्वयम् । उपरितनं कपालं सुवर्णम् । अधस्तनं रजतम् । कूर्मरूपेण हरिणा वायुना च धृतम् । सर्वप्राणिनां चतुर्दशलोकानां चावासस्थानम् । सन्धिदेशे क्षुरधारोपमसुषिरयुक्तम् । तदभिमानी चतुर्मुखः ॥

ततो भगवान्महदादितत्त्वांशान्स्वोदरे निक्षिप्य ब्रह्माण्डान्तः प्रविवेश । तदोदके शयानस्य भगवतो नाभेः पद्ममभूत् । पद्मे च चतुर्मुखोऽजनि । तस्मात्पुनर्देवादयो मनआदीनि जातानि ।

## अविद्याप्रकरणम् – १५

ततोऽविद्योत्पन्ना । सा च पाञ्चपर्वणी । पञ्चपर्वाणि तु मोहो महामोहस्तामिस्रमन्धतामिस्रं तमश्चेति । पुनर्जीवाच्छादिका परमाच्छादिका शैवला माया चेति चतुर्विधा । सर्वाप्यविद्या जीवाश्रिता । प्रातिस्विकी च ।

## वर्णप्रकरणम् – १६

वर्णा अकारादय एकपञ्चाशत् । सर्वे लौकिका वैदिकाश्च शब्दा एकपञ्चाशद्वर्णात्मकाः प्रत्येकं व्याप्ता अनादिनित्याश्च ।

उच्चारणध्वनिव्यङ्ग्याः । प्रत्येकमानुपूर्वीविशेषविशिष्टतया च पदार्थवाचकाः ।

## अन्धकारप्रकरणम् – १७

प्रकाशविनाश्योऽन्धकारः । न तु तेजोऽभावः । चक्रादिच्छेद्य-त्वात् । ब्रह्मणा पीयमानत्वादावरणत्वात्स्वातन्त्र्येणोप-लभ्यमानत्वाच्च ।

## वासनाप्रकरणम् – १८

स्वाप्नपदार्थोपादानानि वासनाः । पूर्वानुभवजन्याः मनोगताः । प्रवाहतोऽनादयः । संस्कारपदवाच्याः ।

## कालप्रकरणम् – १९

आयुर्व्यवस्थापकः कालः । क्षणलवाद्यनेकरूपः । प्रत्येकं व्याप्तः । प्रकृत्योत्पत्तिविनाशवान् । स्वगतः । सर्वाधारश्च । कालप्रवाहस्तु नित्यः । सर्वकार्योत्पत्तिहेतुः ।

## प्रतिबिम्बप्रकरणम् – २०

प्रतिबिम्बस्तु बिम्बाविनाभूतस्तत्सदृशः । स च द्विविधः । नित्योऽनित्यश्च । परमात्मव्यतिरिक्ताः सर्वेऽपि चेतनाः परमात्मप्रतिबिम्बा नित्याः । नित्यानित्योपाधियुक्ताः । स्वापेक्षयोत्तमोत्तमप्रतिबिम्बाश्च । दर्पणादौ मुखादिप्रतिबिम्बा अनित्याः । दर्पणाद्युपाध्युपादानकाः । न तु बिम्बात्मकाः । आभिमुख्यादिविरुद्धधर्माधिकरणत्वात् । छायाऽपि प्रतिबिम्ब-

भूतैव । नत्वन्यालोकोपादानभूता । क्वचिच्चेतनेऽपि छाया-शब्दप्रयोगः प्रतिबिम्बत्वसाम्याद्भवतीति ।

॥ इति श्रीपद्मनाभसूरिविरचिते पदार्थसङ्ग्रहे द्रव्यनिरूपणं समाप्तम् ॥

# III. (i) गुणप्रकरणम्

दोषभिन्नत्वं गुणत्वम् ॥

## रूपप्रकरणम् – १

शुक्लादिव्यवहारहेतुर्गुणो रूपम् । तच्च शुक्लनीलपीतरक्तहरित-कपिलचित्रभेदात्सप्तविधम् । पुनर्द्विविधम् । नित्यमनित्यं च । पुनर्द्विविधम् । उद्भूतमनुद्भूतं च । तत्र शुक्लनीलपीतरक्तादि-सप्तान्यपि नित्यानि रूपाणि परमात्मनः । तद्वल्लक्ष्म्या अपि रूपाणि । सर्वाण्यप्युद्भूतरूपाणि नित्यानि सर्वजीवानाम् । प्रकृतेः शुक्लरक्तनीलानि नित्यानि त्रीणि । तद्वद्गुणत्रयस्यापि । महत्तत्त्वस्य हेमवद्रूपम् । अहङ्कारादौ तु रूपवद्द्रव्यारब्धत्वाद्रूपं सम्भावितम् । भूतेषु तेजोजलपृथिवीष्वनित्यानि रूपा-ण्युद्भूतानि । आकाशे त्वनुद्भूतम् । तत्र पृथिव्यां सप्तविधम् । शुक्लं जले । शुक्लभास्वरं तेजसि । नीलमाकाशतमसोः । सर्वाण्यपि रूपाणि वासनाप्रतिबिम्बयोश्च ।

## रसप्रकरणम् – २

माधुर्यादिव्यवहारहेतुर्गुणो रसः । स च षड्विधः । मधुराम्ल-

लवणकटुकषायतिक्तभेदात् । रूपवन्नित्यानित्यविभागवान् । ईशलक्ष्म्योर्मधुररसः । पृथिव्यां वासनायां च षड्रसाः । जले तु मधुर एव ।

## गन्धप्रकरणम् – ३

सुरम्यादिव्यवहारहेतुर्गुणो गन्धः । स च द्विविधः सुरभिरसुरभिश्चेति । पूर्ववन्नित्यानित्यविभागवान् । ईशलक्ष्मीमुक्तानां सुगन्ध एव । पृथिव्यां वासनायां च द्विविधोऽपि ।

## स्पर्शप्रकरणम् – ४

शीतादिव्यवहारहेतुर्गुणः स्पर्शः । स त्रिविधः शीतोष्णानुष्णाशीतस्पर्शभेदात् । पूर्वोक्तविभागयुक्तः । तत्र हरौ लक्ष्म्यां च त्रिविधोऽपि नित्यश्च । शीतं जले । उष्णं तेजसि कालकूटविषेऽपरोक्षज्ञाने च ।

## सङ्ख्याप्रकरणम् – ५

एकत्वादिव्यवहारहेतुस्सङ्ख्या । एकत्वं द्विविधम् । नित्यमनित्यं चेति । नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वत्रित्वादिकं च सर्वत्रापेक्षाबुद्धिजन्यमनित्यमेव । एकत्वाद्यनन्तपर्यन्ता । सर्वपदार्थवृत्तिः ।

## परिमाणप्रकरणम् - ६

अणुत्वादिहेतुर्गुणः परिमाणम् । तत् त्रिविधम् । अणुमहन्मध्यमं चेति । नित्यं त्रिविधमपि परिमाणमीशलक्ष्म्योर्युगपदेव ।

नित्यमणुपरिमाणं सर्वजीवेषु । अनित्यमणुपरिमाणमनित्य-गतम् । नित्यं महत्परिमाणमव्याकृताकाशप्रकृतिवर्णगतम् । काले क्षणलवादिरूपेऽनित्यं महत्परिमाणम् । कार्यद्रव्येषु सर्वत्र मध्यमपरिमाणमनित्यमेव । मुक्तानां महत्तत्त्वादिकमणि-माद्यष्टैश्वर्यरूपम् ॥

## संयोगप्रकरणम् – ७

संयुक्तव्यवहारहेतुर्गुणः संयोगः । स द्विविधः नित्योऽनित्यश्च । ईशलक्ष्म्योरीशजीवयोर्वर्णाव्याकृताकाशयोर्वर्णानां च परस्परं संयोगो नित्य एव । अनित्यनित्यद्रव्ययोरनित्यानां च परस्परं संयोगोऽनित्य एव । उभयोस्संयोगस्तु नैकः । किन्तु भिन्नभिन्न एव । अनित्यसंयोग एकविध एव । अन्यतरकर्मजः । मल्लयो-स्संयोगस्तु नैकः । किन्तु द्वौ । अतोऽन्यतरकर्मजौ । स्थाणु-श्येनसंयोगवत् । संयोगजसंयोगस्तु नास्त्येव । हस्तशरीर-योरभेदेन हस्तपुस्तकसंयोगेन संयोगान्तरोत्पत्तेरयोगात् ।

## विभागप्रकरणम् – ८

विभक्तव्यवहारहेतुर्गुणो विभागः । स द्विविधः । नित्योऽ-नित्यश्च । अनित्यद्रव्यगतोऽनित्यः । भगवद्रूपाणां परस्परं मूलरूपेण च विश्लेषशब्दवाच्यो विभागो नित्यः । संश्लेषवद-चिन्त्यशक्त्या घटनीयः ।

## परत्वापरत्वप्रकरणम् – ९

परापरव्यवहारकारणे परत्वापरत्वे । ते प्रत्येकं द्विविधे । काल-

परत्वापरत्वे देशपरत्वापरत्वे चेति । पुनर्द्विविधे । नित्येऽनित्ये चेति । नित्ये देशकालपरत्वे उभे अपीशलक्ष्मीजीवेषु । नित्यं कालपरत्वमव्याकृताकाशादिनित्यद्रव्येषु । अनित्यं कालपरत्वं ज्येष्ठे । अनित्यं कालापरत्वं कनिष्ठे । अनित्यं देशपरत्वं दूरस्थेऽनित्यद्रव्ये । नित्यं देशापरत्वमीशलक्ष्म्योः । अनित्यं देशापरत्वं समीपस्थे वस्तुनि ।

## द्रवत्वप्रकरणम् – १०

द्रवणहेतुर्गुणो द्रवत्वम् । तद्विविधम् । नित्यमनित्यं चेति । पुनर्द्विविधम् । सांसिद्धिकं नैमित्तिकं च । सांसिद्धिकं नित्यं द्रवत्वमीशलक्ष्म्योर्देवेषु जलान्तर्गतेषु । अनित्यं सांसिद्धिकं जले। नैमित्तिकं द्रवत्वं घृतसुवर्णादौ ।

## गुरुत्वप्रकरणम् – ११

पतनाऽसाधारणकारणं गुरुत्वम् । नित्यमनित्यं चेति द्विविधम्। नित्यं गुरुत्वमीशलक्ष्म्योः । कृष्णे यशोदाप्रत्यक्षसिद्धम् । योगिनां मुक्तानां च गुरुत्वमष्टैश्वर्यान्तर्गतम् । अनित्यं गुरुत्वं पाषाणादौ कार्यद्रव्यमात्रे । पञ्चतन्मात्रावाय्वाकाशतमस्सु न गुरुत्त्वम् ।

## लघुत्वप्रकरणम् – १२

वेगहेतुर्गुणो लघुत्वम् । तद्विविधम् । नित्यमनित्यं च । नित्यं लघुत्वमव्याकृताकाशवर्णव्यतिरिक्तेशादिद्रव्यवृत्ति । अनित्यं लघुत्वमनित्यद्रव्यवृत्ति । वेगहेतुत्वं च लघुत्वस्य लाघवातिशयेन वेगातिशयदर्शनात्तेज आदौ प्रत्यक्षसिद्धम् । गुरुत्वाभावो लघुत्वमिति च वैपरीत्यपराहतम् । प्रतियोग्यनपेक्षणाच्च ॥

## मृदुत्वप्रकरणम् – १३

मार्दवव्यवहारहेतुर्मृदुत्वम् । नित्यानित्यभेदेन द्विविधम् । नित्यमीशलक्ष्मीमुक्तेषु । अनित्यं मृदुत्वमाकाशकाला-विद्यान्धकारतेजोवायुव्यतिरिक्तेषु कार्यद्रव्येषु ।

## काठिन्यप्रकरणम् – १४

काठिन्यं द्विविधम् । नित्यमनित्यं च । नित्यमीशलक्ष्म्योः । अनित्यमनित्यमूर्तद्रव्ये । न च काठिन्यं निबिडावयवसंयोगो न गुणान्तरमिति वाच्यम् । सम्बन्धिद्वयप्रतीतिं विनाऽपीदं कठिन-मिति प्रतीतेः । अन्यथा गुरुत्वमपि गुणान्तरं न स्यात् ।

## पृथत्त्वखण्डनप्रकरणम् – १५

अन्योन्याभावातिरिक्तं पृथक्त्वं नास्त्येव ।

## स्नेहप्रकरणम् – १६

स्नेहो द्विविधः । मनःप्रावण्यं चूर्णादिपिण्डीभावहेतुश्चेति । उभयमपि नित्यानित्यभेदेन द्विविधम् । आद्यं मनःप्रावण्यं चैतन्यमात्रे । अनित्यं मनःप्रावण्यं संसारिषु । नित्यश्चूर्णादि-पिण्डीभावहेतुरीशलक्ष्म्योः । अनित्यस्तु जलमात्रवर्ती ॥

## शब्दप्रकरणम् – १७

शब्दस्तु ध्वनिः । नित्यानित्यभेदेन द्विविधः । नित्य ईशलक्ष्मी-मुक्तप्राप्तान्धतमसाम् । अनित्यस्त्वव्याकृतकाशाविद्यान्धकार-वर्णव्यतिरिक्तेषु सर्वत्र । आकाशमात्रगुण इति च न युक्तम् ।

पूर्वपूर्वगुणानामुत्तरोत्तरेषु भूतेष्वनुवृत्तेर्भागवतादावुक्तेः । अनुभवाच्च ।

## बुद्धिप्रकरणम् – १८

बुद्धिर्ज्ञानम् । सर्वव्यवहारहेतुर्गुणः । तच्च ज्ञानं द्विविधम् । नित्यमनित्यं च । पुनर्द्विविधम् । यथार्थमयथार्थं च । तत्र यथार्थं नित्यज्ञानमीशलक्ष्मीसज्जीवस्वरूपम् । अयथार्थं नित्यं ज्ञानमसज्जीवस्वरूपम् । अनित्यं यथार्थज्ञानं ब्रह्मादिसर्वजीवानाम् । अनित्यमयथार्थज्ञानं रुद्रादिसर्वजीवानाम् । ब्रह्मवाय्वोः सरस्वतीभारत्योश्च नायथार्थज्ञानम् । पुनर्ज्ञानं द्विविधम् । अनुभवः स्मृतिश्चेति । ईशलक्ष्मीमुक्तानामनुभव एव । न तु संस्कारजन्या स्मृतिः । स्मृतिर्ब्रह्मादिसर्वजीवानाम् ।

अनुभवस्त्रिविधः । प्रत्यक्षानुमितिशाब्दभेदात् । ईशलक्ष्म्योः प्रत्यक्षरूपमेव ज्ञानं नत्वनुमितिर्न वा शाब्दम् । ब्रह्मादीनां तु त्रिविधमपि ज्ञानम् ॥

## सुखप्रकरणम् – १९

सर्वैरनुकूलतया वेदनीयं सुखम् । तद्विविधम् । नित्यमनित्यं च । नित्यमीशलक्ष्मीसज्जीवस्वरूपम् । अनित्यं सुखं ब्रह्मादिसर्वजीवानां संसारावस्थायामेव । उभयमपि ज्ञानवद्बहुतारतम्योपेतम् । नित्यसंसारिणां तु दुःखमिश्रं सुखम् । तमोयोग्यानामनित्यं सुखं संसारावस्थायामेव । तारतम्योपेतम् ॥

## दुःखप्रकरणम् – २०

प्रतिकूलतया वेदनीयं दुःखम् । तदपि नित्यानित्यभेदेन द्विविधम्। नित्यं दुःखं तमोयोग्यानां स्वरूपं तारतम्योपेतम् । नित्यसंसारिणां सुखमिश्रं दुःखं स्वरूपभूतम् । अनित्यं दुःखं सर्वजीवानाम् ।

## इच्छाप्रकरणम् – २१

काम इच्छा । सा द्विविधा । नित्यानित्यभेदात् । दुष्टादुष्टभेदेन पुनर्द्विविधा । तत्रादुष्टनित्येच्छा ईशलक्ष्मीसज्जीवस्वरूपभूता । अदुष्टाऽनित्येच्छा सर्वजीवानां संसारे । नित्यदुष्टेच्छा तमोयोग्य-स्वरूपा । अनित्यदुष्टेच्छा रुद्रादिसर्वजीवानाम् । ब्रह्मवायु-तत्स्त्रीणां तु नासद्विषयेच्छा ।

## द्वेषप्रकरणम् – २२

क्रोधो द्वेषः । स द्विविधः । नित्यानित्यभेदात् । नित्यः क्रोध ईशलक्ष्मीसर्वजीवानां स्वरूपम् । अनित्यः संसारिजीवानां बाह्यः ।

## प्रयत्नप्रकरणम् – २३

प्रवृत्तिः प्रयत्नः । नित्यानित्यभेदात्सोऽपि द्विविधः । नित्यः प्रयत्न ईशलक्ष्मीसर्वजीवानां स्वरूपम् । अनित्यः प्रयत्नः संसारिणाम् । बुध्यादिप्रयत्नान्तं मनोधर्म एवानित्यम् । तत्स्वामित्वात्तदनुभवितृत्वाज्जीवस्य ।

## धर्माधर्मप्रकरणम् – २४

धर्माधर्मौ पुण्यपापे । नित्यानित्यभेदेन तौ द्विविधौ । पुनर्द्विविधौ। अल्पमहद्भेदात् । अनित्यौ द्विविधौ । काम्यकर्मजाकाम्यकर्मजभेदात् । तत्रेशलक्ष्म्योः पुण्यपापसम्बन्ध एव नास्ति। नित्यं पुण्यं ब्रह्मादिसज्जीवस्वरूपम् । ज्ञानोत्तरभाविसत्कर्मणाऽभिव्यज्यते । मोक्षे आनन्दातिशयहेतुः। अनित्यं पुण्यं सर्वजीवानां बाह्यम् । काम्यकर्मजमकाम्यकर्मजं च । ज्ञानात्पूर्वभाव्यकाम्यकर्मजं पुण्यमपरोक्षज्ञानहेतुरन्तःकरणशुद्धिद्वारा । काम्यकर्मजं पुण्यमनित्यं स्वर्गादिकाम्यफलहेतुः । पुनरनित्यं द्विविधम् । इष्टानिष्टभेदात् । अनिष्टपुण्यस्य कस्यचिद्भोगेन नाशः। कस्यचिदपरोक्षज्ञानेन नाशः । इष्टपुण्यस्य न ज्ञानेन नाशः । ज्ञानोत्तरं मोक्षे वा भोगानुकूलम् । पुनः काम्यपुण्यं द्विविधम् । प्रारब्धमप्रारब्धं चेति । भोक्तुमारब्धं प्रारब्धम् । सञ्चितं भोक्तव्यमप्रारब्धम् । महतः प्रारब्धस्य पुण्यस्य भोगेनैव नाशः । ब्रह्मादिसज्जीवानां अल्पस्य प्रारब्धस्य ज्ञानेन विनाशः ।

पापप्रारब्धस्यापि भोगेन नाशो रुद्रादिसर्वजीवानाम् । नित्यं पापमीषद्रुदादिसज्जीवस्वरूपम् । तच्च श्रेष्ठापराधादपरोक्षज्ञानानन्तरमभिव्यज्यते । मुक्तावधिकानन्दस्य प्राप्तव्यस्य ह्रासकारणं देवानाम् । मनुष्योत्तमानां तु क्लृप्तानन्दस्यैव ह्रासकारणम् ।

नित्यं महत्पापं तमोयोग्यस्वरूपम् । तमस्साधनम् । अनित्यं पापं भगवद्द्वेषपरिपाकहेतुः । द्वेषपरिपाकानन्तरं च कृतं पापं तमसि दुःखातिशयहेतुः ।

तेषामनित्यपुण्यमैहिकपुरुषार्थहेतुः । न तु स्वर्गादिपारलौकिक-सुखहेतुः । द्वेषपरिपाकेन च सञ्चितस्येष्टपुण्यस्य सर्वस्यापि विनाशः । अनिष्टपुण्यस्याविनाशः । अनिष्टपापस्य तु तमस्यनुस्यूतिः । प्रारब्धपुण्यपापयोस्तु भोगेनैव विनाशः । एतयोरेवादृष्टमिति नाम । तच्च कार्यमात्रं प्रति कारणम् ।

## संस्कारप्रकरणम् – २५

संस्कारश्चतुर्विधः । वेगो भावना योग्यता स्थितस्थापकश्चेति । धावनादिक्रियाहेतुर्गुणो वेगः । स द्विविधः । नित्योऽनित्यश्च । नित्य ईशलक्ष्मीप्रकृतिजीवस्वरूपभूतः । अनुभवजन्यः स्मृतिहेतुस्संस्कारो भावना । अनित्यैव । ईशलक्ष्मीमुक्तानां स्मरणाभावान्न भावना । हठाख्ययोग्यताऽनादिरूपा । मोक्ष-तमसोस्तत्साधनानां तारतम्यस्य च व्यवस्थापिका । अन्यथा साङ्कर्यात् । सा ब्रह्मादिसर्वजीवानां स्वरूपभूतैव । पूर्वा-वस्थापादकः स्थितस्थापकः । नित्योऽनित्यश्चेति द्विविधः । नित्य ईशलक्ष्म्यादिस्वरूपभूतः । अनित्यः कटधनुरादिवर्ती ॥

## आलोकप्रकरणम् – २६

रूपादिज्ञानहेतुरालोकः । स द्विविधः नित्योऽनित्यश्च । नित्य ईशलक्ष्मीमुक्तजीवानां स्वरूपम् । अनित्यो अनित्यतेजो-मात्रवृत्तिः । दीपेनैव सह गमनागमनरूपानुविधानाद्गुणत्वम् ॥

## शमदमादिगुणप्रकरणम् – २७

शमो बुद्धेर्भगवन्निष्ठता । नित्यानित्यभेदेन द्विविधः । नित्य

ईशलक्ष्मीब्रह्मादिसज्जीवस्वरूपभूतः । अनित्यः सकलजीवानां बाह्यः ।

इन्द्रियनिग्रहो दमः । नित्यानित्यभेदेन द्विविधश्शमवत् ।

कृपा दया । नित्यानित्यभेदेन साऽपि द्विविधा । नित्या ईश-लक्ष्मीसज्जीवस्वरूपभूता । अनित्या सर्वजीवानाम् ।

सुखदुःखादिद्वन्द्वसहिष्णुता तितिक्षा । कृपावन्नित्याऽनित्या च ।

परापेक्षां विना कार्यानुकूलगुणो बलम् । तद्विविधम् । नित्याऽ-नित्यभेदात् । नित्यं बलं चेतनमात्रस्य । अनित्यं संसारिणां बाह्यम् ।

भयं नित्यानित्यभेदेन द्विविधम् । नित्यं भयं दैत्यस्वरूपभूतम् ।

लज्जाऽपि स्वरूपास्वरूपभेदेन द्विविधा । स्वरूपभूता लज्जा लक्ष्म्यादीनामपि । अनित्या संसारिणाम् ।

गाम्भीर्यादीनि सौन्दर्यान्तानि द्विविधानि पूर्ववज्ज्ञेयानि । प्रभृतिशब्देन शब्दादयो ग्राह्याः ।

## पाकजादिप्रक्रियाप्रकरणम् – २८

रूपरसगन्धस्पर्शशब्दाः पृथिव्यां पाकजा अपाकजाश्च ॥ अन्यत्रापाकजाः ।

कारणं द्विविधम् । उपादानकारणमपादानकारणं चेति । परिणामिकारणमेवोपादानकारणम् । अपादानकारणमेव

निमित्तकारणमित्युच्यते । कार्यं सदसदात्मकम् । उत्पत्तेः पूर्वं कारणात्मना सत् कार्यात्मनाऽसच्च । उत्पत्त्यनन्तरं कार्यात्मना सत् कारणात्मनाऽसच्च । उपादानोपादेययोर्भेदाभेदौ । यावद्द्रव्यभाविनां गुणक्रियाजातीनां गुण्यादिभिरत्यन्ताभेद एव । अयावद्द्रव्यभाविनां तु भेदाभेदौ । उपादानगता एव गुणाः कार्यगाः ॥

ज्ञानोत्पत्तिक्रमस्तु । आत्मा मनसा संयुज्यते । मन इन्द्रियेणेन्द्रियमर्थेन । ततोऽन्तःकरणमेव ज्ञानात्मना परिणमते । ज्ञाना-दिच्छा। इच्छातः प्रवृत्तिः । अपरोक्षज्ञानहेतुरिन्द्रियार्थ-सन्निकर्षस्संयोग एव । गुणादिभिरपीन्द्रियस्य संयोग एव । ज्ञानविषययोस्तु विषयविषयिभावः । अन्तःकरणस्थितस्य ज्ञानस्य बाह्यघटादिना संयोगाभावात् ॥

## III. (ii) प्रमाणप्रकरणम्

### प्रत्यक्षानुमानप्रकरणम् – २९

ज्ञानकरणं त्रिविधम् । प्रत्यक्षानुमानशब्दभेदात् । तत्र यथार्थज्ञानकरणानि प्रमाणानि । अयथार्थज्ञानकरणान्य-प्रमाणानि । यथार्थज्ञानमपि प्रमाणम् । स्वरूपेन्द्रियं साक्ष्यपि प्रत्यक्षरूपं प्रमाणम् । इन्द्रियार्थसन्निकर्षद्वारा चक्षुरादि-षडिन्द्रियाणि ज्ञानजनकानि । संस्कारद्वारा मनः स्मरण-साधनम्। यथार्थस्मृतिरपि प्रमाणम् । दोषसहकारे-णेन्द्रियाण्ययथार्थज्ञानजनकानि ।

## (२) अनुमानप्रकरणम्

व्याप्तिज्ञानं समुचितदेशादौ सिद्धिश्चानुमानसहकारि । न तु पक्षधर्मताज्ञाननियमः ॥

शक्तिज्ञानमाकांक्षाऽऽसत्योश्च ज्ञानं शाब्दज्ञानकारणम् । न तु योग्यताज्ञानमपि । अत्यन्तासत्यप्यर्थे शब्दस्य ज्ञानजनकत्व-दर्शनात् । स्वातन्त्र्येण पदार्थस्मरणं न हेतुः । शक्तिज्ञान एवान्तर्भूतत्वात् ॥

साहचर्यनियमो व्याप्तिः । पदपदार्थयोर्वाच्यवाचकभावसम्बन्धः शक्तिः । तद्ग्रहश्च सादृश्यपुरस्कारेण सर्वधूमाग्न्योः सर्वपदार्थयोश्च भवति । न तु सामान्यप्रत्यासत्त्या ।

प्रत्यक्षादिजन्यं ज्ञानं सविकल्पकमेव । न तु निर्विकल्पकम् । मानाभावात् ॥

प्रत्यक्षप्रमाणमष्टविधम् । साक्षिषडिन्द्रिययथार्थज्ञानभेदात् ॥

अनुमानं त्रिविधम् । केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकि-भेदात् । अन्वयसहचारमात्रग्राह्यव्याप्तिकं केवलान्वयि । स्वातन्त्र्येणानुमितिहेतुः । व्यतिरेकसहचारमात्रग्राह्यव्याप्तिकं केवलव्यतिरेकि । व्यतिरेकव्याप्तिज्ञानमन्वयव्याप्तिज्ञानद्वाराऽनु-मितिहेतुः । न तु साक्षात् । व्यधिकरणत्वाद्व्यतिरेकव्याप्तेः । उभयसहचारग्राह्यव्याप्तिकमन्वयव्यतिरेकि । अत्राप्यन्वयव्याप्ति-ज्ञानमेवानुमितिहेतुः । व्याप्तिज्ञानकारणभेदाद्भेदः । स्वार्थं परार्थं चेति पुनर्द्विविधमनुमानम् । स्वार्थं स्वानुमितिहेतुः ।

परानुमितिहेतुः परार्थम् । यावता विना नानुमिति-स्तावदवयवाः प्रयोक्तव्याः । न तु पञ्चावयव-नियमः ॥

## आगमप्रकरणम् – ३०

आगमो द्विविधः । पौरुषेयापौरुषेयभेदात् । पौरुषेय आप्तोक्त एव प्रमाणम् । वक्तुराप्तता च विवक्षितार्थतत्त्वज्ञानम् । भ्रमप्रमादविप्रलिप्साकरणापाटवादिशून्यत्वं च । वेदानुसारित्वं वा । यथा भारतादि ।

अपौरुषेयस्तु सर्वोऽपि वेदः प्रमाणम् । वेदापौरुषेयत्वं च वेदेनैव सिद्धम् । उपक्रमादिषड्विधतात्पर्यलिङ्गैर्निर्णीतार्थक एव वेदः प्रमापकः । अन्यथा भ्रमजनकः ।

वेदार्थस्त्रिविधः । परमात्मा ब्रह्मादिदेवास्तदन्तर्गतभगवद्रूपाणि चेति । परममुख्यया वृत्त्या परमात्मा प्रतिपादकः । तदन्य-प्रतिपादकता च मुख्यया लक्षणया गौण्योपचारेण रूढोपचारेण रूढलक्षणया चेति ।

मुख्यवृत्तिरपि त्रिविधा । योगो रूढिर्योगरूढिश्चेति । प्रयोगबाहुल्यमात्रं रूढिः । यथा गोघटादिशब्दानां गोघटादिषु । अवयववृत्तिर्योगः । यथा पाचकादिशब्दानां देवदत्तादौ । तदुभयं योगरूढिः । यथा पङ्कजादिशब्दानां पद्मादौ । मुख्यान्वयानु-पपत्तिपूर्वकं मुख्यसम्बन्धवति वृत्तिर्लक्षणा । यथा गङ्गायां घोष इत्यत्र गङ्गापदस्य तीरे । मुख्यार्थसादृश्यवति वृत्तिर्गौणी । यथाग्निशब्दस्य माणवके । उपचारमात्रं यथा । चित्रलिखित-

सिंहादौ सिंहशब्दस्य । तत्र प्रयोगबाहुल्यं चेद्रूढोपचारः । यथा तप्तायःपिण्डे दग्धृशब्दस्य । रूढलक्षणा यथा । मार्गाश्चलन्तीत्यादौ मार्गादिशब्दानां तत्स्थे ॥

लक्षणापि त्रिविधा । जहदजहल्लक्षितलक्षणाभेदात् । मुख्यार्थपरित्यागो यत्र तत्र जहल्लक्षणा । गङ्गापदस्य तीरे । मुख्यार्थस्यापरित्यागो यत्र तत्राजहल्लक्षणा । छत्रिपदस्याच्छत्रिष्वपि । लक्ष्यं सम्बन्धीकृत्य तत्सम्बन्धिनि वृत्तिर्लक्षितलक्षणा । एकीभवन्तीत्यादौ च्विप्रत्ययस्य मत्यैक्यद्वारा मतिमत्सु । एता वृत्तयो जगति ।

परमात्मनि महायोगो महारूढिश्च । इन्द्रादिजगद्वाचिशब्दानां परमात्मनि महायोगः । योगार्थस्यैश्वर्यादेः परमात्मनि निरवधिकत्वात् । इन्द्रादिगताल्पैश्वर्यस्यापि परमात्माधीनत्वाच्च । नारायणादिशब्दानां महायोगरूढिः ।

शक्तिश्च योग्येतरान्वितस्वार्थे व्यक्तावेव । न तु जातिविशिष्टे । गौरवात् । जातिभानं चाविनाभागवत् । अन्वयबोधश्च क्वचित्पदाध्याहारेण क्वचिदावृत्त्या क्वचित्तात्पर्यात् ।

विधिना प्रवर्तकं ज्ञानम् । निषेधेन निवर्तकं ज्ञानम् । विध्यर्थश्च बलवदनिष्टाननुबन्धित्वं कृतिसाध्यत्वं इष्टसाधनत्वं च । न तु कार्यमपूर्वम् । तस्य कल्प्यत्वात् । तच्चापूर्वं फलसमानाधिकरणम् । न तु कृतिसमानाधिकरणम् । श्येनेनाभिचरन् यजेतेत्यादौ विधेरिष्टसाधनत्वेन लक्षणा । तस्य नरकादिबलवदनिष्टानुबन्धित्वात् । बलवदनिष्टानुबन्धित्वमिष्टसाधनत्वाभावश्च निषेधार्थः ॥

अपभ्रंशानां तु न शक्तिः । किन्तु शक्तिभ्रमादाधुनिकसङ्केता-द्वाऽर्थबोधः । वैदिकाश्शब्दाः साधवः । अपभ्रंशाश्चासाधवः । व्याकरणव्युत्पाद्यत्वं साधुत्वम् । तदभावोऽसाधुत्वम् ।

प्रमाणानां प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वम् । ज्ञानकारण-मात्रजन्यत्वमुत्पत्तौ स्वतस्त्वम् । ज्ञानग्राहकसाक्षिग्राह्यत्वनैयत्यं ज्ञप्तौ स्वतस्त्वम् । अन्यथाऽनवस्थानात् । स्वतस्त्वे संशयानु-पपत्तिर्बाधिकेति चेन्न । स्वतस्त्वस्यौत्सर्गिकत्वात् । बाधके सति साक्षी प्रामाण्यं न गृह्णातीत्यभ्युपगमात् । अप्रामाण्यं च परतो ज्ञायते । उत्पद्यते चेति ॥

इति श्रीमत्पद्मनाभसूरिविरचिते पदार्थसङ्ग्रहव्याख्याने मध्वसिद्धान्तसारे गुणप्रकरणं समाप्तम् ॥

## IV. सृष्टिस्थितिसंहारादिप्रकरणम्

### सृष्टिप्रकरणम् - १

एवं पदार्थे निरूपिते तत्सृष्ट्यादिकर्तृत्वेन भगवज्ज्ञानं मोक्ष-साधनमिति सृष्ट्यादिकं निरूप्यते । परमात्मनः प्रलयान्ते सिसृक्षा भवति । ततः प्रकृतिं प्रविश्य क्षोभयति । ततो गुणत्रयात्मना विभजति । ततो महदाद्यण्डपर्यन्तं तत्त्वानि तदभिमानिब्रह्मादिदेवांश्च सृजति। ततश्चेतनाचेतनानामंशानुदरे निक्षिप्य ब्रह्माण्डं प्रविशति। ततो दिव्यवर्षसहस्रान्ते स्वनाभितः पद्मं जनयति । तच्च पद्मं आद्यब्रह्मणः प्रथम-

परार्धान्ते जायते । तत्पद्मे चतुर्मुखोऽजनि । चतुर्मुखो जगत्सृष्टौ साधनास्मृत्या दिव्यवर्षसहस्रपर्यन्तं तपः करोति । तत्तपसा प्रसन्नो भगवान्स्वदेहतः पञ्चभूतानि सृजति । ततश्चतुर्मुखान्तर्गतस्सन् सन्नामको भूत्वा पञ्चभूतैः पद्मदलैश्चतुर्दशभुवनानि सृजति । पुनः सर्वे देवा अण्डान्तर्जायन्ते ॥

लक्ष्म्यादिनित्यानामपि पराधीनविशेषावाप्तिलक्षणोत्पत्तिः । ब्रह्मणः प्रतिदिनं भूर्भुवः स्वरिति लोकत्रयस्य सृष्टिविनाशौ । चतुर्युगसहस्राणि ब्रह्मण एकं दिनम् । तत्र चतुर्दशमन्वन्तराणि। एकैकस्य मनोः सार्धाष्टादशलक्षवर्षाधिकैकसप्ततिमहायुगाः भुक्तिकालाः । एवं स्वर्गलोकाधिपतय इन्द्राश्चतुर्दश ।

कृतत्रेताद्वापरकलिभेदेन युगचतुष्टयम् । तत्र देवतामानेन चतुस्सहस्रवर्षाणि कृतयुगस्य । पूर्वोत्तरं च प्रत्येकं चतुश्शतवर्षाणि सन्धिकालाः । तथा त्रेतायुगस्य त्रिसहस्रवर्षाणि । पूर्वोत्तरं च प्रत्येकं त्रिशतवर्षाणि सन्धिकालाः । एवं द्वापरयुगस्य द्विसस्रवर्षाणि । पूर्वोत्तरं प्रत्येकं द्विशतवर्षाणि सन्धिकालाः । तथा कलियुगस्यैकसहस्रवर्षाणि । पूर्वोत्तरं शतवर्षाणि सन्धिकालाः । तथा च द्वादशसहस्रवर्षाणि चतुर्युगस्य । एतच्चतुर्युगस्याप्यावृत्तावेको महायुगः ।

सृष्टिकालविशेषः कल्पः । स द्विविधः महाकल्पः पाद्मकल्पश्चेति । ब्रह्मकल्पोऽपि द्विविधः । दिनकल्पो मनुकल्पश्चेति । प्रतिदिनं सृष्टिकालो दिनकल्पोऽष्टादशसहस्रात्मकः । ब्रह्मण एकैकस्मिन्दिने चतुर्दशमनुकल्पाः । ब्रह्मणः प्रतिदिनं राजसतामसैर्जनैः

सात्विकजनोपद्रवे सति मत्स्यकूर्माद्यवतारा भविष्यन्ति । तत्रापि वैवस्वतमन्वन्तरे दशावताराः । अन्यत्रान्यावतारा अपि । एतैरवतारैरयोग्यजनसंहारः सज्जनोद्धारश्च भविष्यति ।

## स्थितिप्रकरणम् – २

भगवता नानारूपैर्जगत्प्रविश्य जाग्रदाद्यवस्थाभिः पोषणं स्थितिः । अवस्थाश्च जाग्रत्स्वप्नसुषुप्तिमोहतुरीयभेदात्पञ्च-विधाः। देहेन्द्रियाद्यभिमानेन तत्तद्विषयानुभवात्सुखदुःखोत्पादो जाग्रदवस्था । तत्प्रवर्तको विश्वनामकः परमात्मा दक्षिणाक्ष्यग्रे स्थितः । स च सप्ताङ्ग एकोनविंशतिमुखः । तदा हृदय-स्थजीवस्य दक्षिणाक्षिस्थविश्वप्राप्तिः । सांशजीवानामंशेन । निरंशजीवानां तु प्रकाशतः । सा चावस्था ब्रह्मादि-सर्वचेतनानाम् ।

देहेन्द्रियाद्यभिमानेन मनसः स्वाप्नपदार्थानुभवः स्वप्नावस्था । तत्प्रवर्तकस्तैजसनामा भगवान्कण्ठदेशगतमनस्संस्थः । सोऽपि सप्ताङ्ग एकोनविंशतिमुखः । स्वप्नावस्था च सर्वजीवानाम् । तत्र जीवस्य तैजसप्राप्तिः ॥

बाह्यस्वाप्नपदार्थादर्शनेन स्वरूपानुभवः सुषुप्तिः । तत्र सर्वेन्द्रियाणामुपरमः । तत्प्रवर्तकः प्राज्ञः । तदा जीवस्य तत्प्राप्तिः । सा चावस्था रुद्रादिसर्वजीवानाम् । जाग्रदवस्थायां तैजसप्राज्ञाभ्यां विश्वस्यैकीभाव इत्यादि बोध्यम् ॥

मूर्च्छावस्था मोहावस्था । तदा दुःखमात्रानुभवः । तत्प्रवर्तको

भगवान् । रूपविशेषस्तु अस्माभिर्न बुद्धो महान्तः प्रष्टव्याः । सा चावस्था रुद्रादिसर्वजीवानाम् । तत्रार्धप्राप्तिः परमात्मना जीवस्य ॥

तुरीयावस्था मोक्षः । सा च वक्ष्यते । तत्प्रवर्तकस्तुरीयनामा भगवान् । नासिकामारभ्य द्वादशाङ्गुलपरिमितदेशगतः । एवं गर्भादावपि भगवान्पोषकः ।

## संहारप्रकरणम् – ३

संहारस्तु प्रलयः । स च द्विविधः । महाप्रलयोऽवान्तरप्रलयश्चेति। गुणत्रयमारभ्य ब्रह्माण्डपर्यन्तस्य तदभिमानिब्रह्मादीनां च विनाशो महाप्रलयः । तदेश्वरस्य सञ्जिहीर्षा भवति । तया शेषान्तर्गतस्य परमात्मनो मुखादग्निज्वाला जायते । तया ब्रह्माण्डस्य सावरणस्य भस्मीभावः । कार्याणां कारणेषु लयः ।

प्रकृतिमात्रावस्थानम् । तदा लक्ष्म्यात्मकं महोदकम् । तत्र वटपत्रे लक्ष्म्यात्मके शून्यनामा नारायणः शेते । सर्वेऽपि जीवास्तदुदरं प्रविशन्ति । श्वेतद्वीपानन्तासनवैकुण्ठेषु श्रीभागानां न नाशः । अन्धतमसः न विनाशः । रौरवाद्यनित्यनरकाणां च विनाशः। प्रकृत्या क्षणलवादिकालमात्रसृष्टिः ॥

अवान्तरप्रलयस्तु द्विविधः । दैनन्दिनप्रलयो मनुप्रलयश्चेति । प्रतिदिनं ब्रह्मणो रात्र्यागमे विनाशो दैनन्दिनप्रलयः । तत्र भूरादिलोकत्रयमात्रस्य विनाशः । इन्द्रादयस्तु तदा महर्लोकादिकं गच्छन्ति । एकैकमनुभुक्तिकालसमाप्तौ यो विनाशः स मनु-

प्रलयः । तदा भूरादिलोकत्रयनाशो नास्ति । भूलोकस्थ-मनुष्यादिमात्रविनाशः । लोकद्वयस्थानां तु महर्लोकादिगमनम् । तदा लोकत्रयस्याप्युदकेन पूर्तिः ॥

## नियमनप्रकरणम् – ४

नियमनं च येन येन क्रियते तत्सर्वं परमात्मप्रेरणयैव क्रियत इति परमात्मप्रेरणमेव ।

## ज्ञानप्रकरणम् – ५

येन येन साधनेन यस्य यस्य यद्यज्ज्ञानं जायते तत्सर्वं परमात्मना जन्यत इति ज्ञानमपि परमात्माधीनम् । तद्विविधम् । संसारहेतु-र्मोक्षहेतुश्चेति । देहापत्यकलत्रादिषु ममतादिरूपं ज्ञानं संसारहेतुः ॥

### (अ) अपरोक्षज्ञानप्रकरणम्

मोक्षसाधनं च ज्ञानं योग्यापरोक्षरूपम् । तद्बहुसाधन-सम्पत्तिजन्यम् । चतुर्मुखमारभ्य मनुष्योत्तमपर्यन्तं सज्जीवा-नामेवापरोक्षज्ञानं जायते । न तु तमोयोग्यानाम् । एकै-कस्मिन्ब्रह्मकल्पे एकैकस्य ऋजोरपरोक्षज्ञानम् । एकैकस्य मुक्तिः ॥

### (आ) अपरोक्षज्ञानसाधनप्रकरणम्

मोक्षसाधनीभूतापरोक्षज्ञानसाधनानि च विविधसांसारिकदुःख-दर्शनेन सज्जनसङ्गत्या चेहामुत्रफलभोगविरागः शमदमादि-सम्पत्तिः अध्ययनसम्पत्तिः शरणागतिः गुरुकुलवासः तदुप-

देशेन सच्छास्त्रार्थज्ञानरूपं श्रवणं श्रुतस्य तत्त्वस्य दृढीकरणाय मीमांसापरपर्यायो विचारो मननं गुरुभक्तिर्यथायोग्या परमात्म-भक्तिः स्वाधमेषु सत्सु दया स्वसमेषु स्वात्मवत्स्नेहः उत्तमेषु भक्तिः निवृत्तकर्मानुष्ठानं निषिद्धसंत्यागः सर्वसमर्पणं तारतम्य-परिज्ञानं पञ्चभेदज्ञानं प्रकृतिपुरुषविवेकज्ञानं अयोग्यनिन्दा उपासना चेति ब्रह्मादिसर्वयोग्यजीवसाधारणानि ॥

## (१) गुरुप्रकरणम्

गुरवोऽपि द्विविधाः । नियतगुरवोऽनियतगुरवश्चेति । शिष्य-स्वरूपं सम्यग्ज्ञात्वा तद्योग्यविशिष्टभगवद्रूपविशेषविषयक-विधोपदेशकर्तारो नियतगुरवः । मनुष्योत्तमस्य ऋषयः । ऋषीणां चक्रवर्तिनां च ऋषयो देवाश्च। देवानां च स्वोत्तमा देवाः । तत्रापि सूर्यचन्द्रपदयोग्यौ देवौ सुरूपशान्तरूपनामकौ यौ तयोः सुमनोनामकगरुडपदयोग्यो देवो नियतगुरुः । तथा शक्रपदयोग्यस्य सुमन्तनाकमस्य सुमनोनामकगरुडपदयोग्य एव नियतगुरुः । सुमनोनामकगरुडपदयोग्यस्योग्रतपोनामकरुद्र-पदयोग्यस्य च ब्रह्मपदयोग्यः ऋजुर्लातव्यो नियतगुरुः । तत्र मनुष्यादीनां बहुजन्मसु श्रवणम्। सूर्यचन्द्रपदयोग्ययोस्तु मन्वन्तरचतुष्टयं श्रवणकालः । इन्द्रपदयोग्यस्य दश मन्वन्तरं श्रवणकालः । गरुडपदयोग्ययोस्तु सार्धपरार्धकालः ॥

अनियतगुरवस्तु भगवत्तत्त्वमात्रोपदेष्टारः । तेभ्योऽपि श्रोतव्य-मेव । पूर्वप्राप्तगुरुस्सर्वथा न त्याज्यः । तदुत्तमप्राप्तौ पूर्वानुज्ञा न मृग्यते। समप्राप्तौ विकल्पः । अधमप्राप्तौ पूर्वानुज्ञा मृग्यत

एव । स्वोत्तमास्सर्वेऽपि गुरवो ब्रह्मपर्यन्तम् । तेषु तत्तन्माहात्म्यानुसारेण भक्तिः कर्तव्या । मोक्षार्थमनुज्ञाप्रदातृत्वात् । ज्ञानप्रयोजकत्वात् । शिष्यानुष्ठितश्रवणादिफलभोक्तृत्वाच्च । तत्र गुरोः शिष्यापेक्षयाष्टभागाधिकफलं भविष्यति । तस्मादपि तद्गुरोर्द्विगुणं फलम् । तस्मात्सार्धं फलमपरेषाम् । तेभ्यः सहस्रगुणितं फलं देवानाम् । तेभ्यश्चतुर्मुखस्य महौघगुणितं फलम् । तत्र द्वात्रिंशल्लक्षणवत्त्वाद्ब्रह्मोत्तमोत्तमगुरुः । रुद्रादयस्तु क्रमाल्लक्षणहीना अमुख्या गुरवः । अतो गुरुभक्त्या गुरुप्रसादस्सम्पादनीयः ।

## (२) तारतम्यप्रकरणम्

तारतम्यं चास्मद्गुरुपादैस्सम्यगुपपादितं तारतम्यस्य सङ्ग्रहे तत्रैवानुसन्धेयम् ॥

## (३) उपासनाप्रकरणम्

उपासना च द्विविधा । सततं शास्त्राभ्यासरूपा ध्यानरूपा चेति । तत्र केषाञ्चिदधिकारिणां सततं शास्त्रालोडनेनापरोक्षज्ञानं जायते । केषाञ्चिद्ध्यानेन ।

ध्यानं चेतरतिरस्कारपूर्वकभगवद्विषयकाखण्डस्मृतिः । तदेव निदिध्यासनम् । तच्च श्रवणमननाभ्यामज्ञानसंशयमिथ्याज्ञाननिरासेनेदमित्थमिति निश्चयवतो भवति । सा चोपासना आत्मत्वमात्रगुणविशिष्टत्वेन भगवद्विषया एकगुणोपासकानाम् । सच्चिदानन्द आत्मेति चतुर्गुणविशिष्टभगवद्रूपविषया

मनुष्योत्तमानाम् । देवर्ष्यादीनां तु यथायोग्यं बहुगुणविशिष्ट-व्यासभगवद्रूपविषया । देवेष्वपि ब्रह्मा वेदोक्तानन्तगुणक्रिया-विशिष्टानन्तरूपोपासनां करोति । सरस्वती तु क्रियांशे सामान्याकारेणैवोपासनां करोति। गरुडरुद्रौ च गुणक्रिययोः सामान्याकारेणानन्तभगवद्रूपोपासनां कुरुतः । इन्द्रादयस्तु गुणसामान्यतः क्रियासामान्यतो रूपसामान्यत उपासनां कुर्वन्ति ।

देहान्तर्गतबिम्बोपासना केषाञ्चिदृषीणाम् । अग्निप्रतिमयो-रुपासना मनुष्याणाम् । व्याप्तोपासना देवानाम् । केषाञ्चि-दृषीणां गन्धर्वाणामप्सरसां च । सर्वैरपि बिम्बरूपोपासनं कर्तव्यमेव । बिम्बरूपं च प्राज्ञरूपमिति सम्प्रदायविदः । तत्त्रिविधं प्रादेशमूलेशाग्रेशभेदात् । हृदयस्थप्रादेशोपासना-योग्याश्च केचन । हृत्कर्णिकामूलगताङ्गुष्ठाग्रपरिमाणरूप-मूलेशोपासकाश्च केचन । हृत्कर्णिकाग्रगताङ्गुष्ठपरिमितभगव-द्रूपोपासकाश्च केचन ॥

ऋजूनां शतब्रह्मकल्प उपासनाकालः । रुद्रगरुडपदयोग्ययोस्तु चत्वारिंशद्ब्रह्मकल्पेषु मोक्षप्रयत्नः । शक्रस्य विंशतिकल्पेषु प्रयत्नः । सूर्यादीनां दशकल्पेषु प्रयत्नः । रुद्रपदयोग्यस्य सार्ध-परार्धस्य त्रिभागकाल उपासनाकालः । शक्रपदयोग्यस्य मन्वन्तरचतुष्टयमुपासनाकालः । सूर्यचन्द्रपदयोग्ययोस्तु एक-मन्वन्तरमुपासनाकालः । अन्येषां त्वेकमन्वन्तर एवोपासना-कालाः कतिपयाः ॥

## (४) पञ्चभेदप्रकरणम्

पञ्चभेदास्तु जीवेशयोर्भेदः जीवानां च परस्परं भेदः जडेशयोर्भेदः जडानां च परस्परं भेदः जडजीवयोर्भेदः । एते पञ्चभेदा अनादिनित्या मुक्तावप्यनुस्यूताः ॥

## (५) अपरोक्षज्ञानप्रकरणम्

एतत्साधनसम्पत्त्या ब्रह्मादिमानुषान्तमपरोक्षमानं यथायोग्यं जायते । तत्र मनुष्योत्तमानां विद्युद्वद्ब्रह्मापरोक्षज्ञानम् । सूर्यमण्डलवत्तेजःपुञ्जत्वेन भगवद्विषयमपरोक्षज्ञानं देवानाम् । प्रतिबिम्बवद्गरुडरुद्रयोः । ब्रह्मणस्तु यावदवयवविशिष्टत्वेन स्पष्टं भगवदपरोक्षज्ञानम् । व्याप्तोपासकानां केषाञ्चिद्ब्रह्माण्डान्तर्गततन्मात्रपरिमितभगवद्रूपापरोक्षज्ञानम् । सूर्यावराणां देवानां ब्रह्माण्डाद्बहिरपि पञ्चभूतपर्यन्तं स्थितभगवद्रूपापरोक्षज्ञानम् । चन्द्रसूर्यौ तु मनस्तत्त्वपर्यन्तं व्याप्तभगवद्रूपं पश्यतः । उमासौपर्ण्यौ महत्तत्त्वपर्यन्तं व्याप्तरूपं पश्यतः । गिरिशगरुडौ तमोगुणपर्यन्तं व्याप्तभगवद्रूपं पश्यतः । वाणी त्रैगुण्यात्परतः शतगुणितं व्याप्तरूपं पश्यति । ब्रह्मा तु यावदव्याकृताकाशं व्याप्तभगवद्रूपं पश्यति ।

ब्रह्मणः शतब्रह्मकल्पात्पूर्वं योग्यापरोक्षज्ञानं जायते । पञ्चाशद्ब्रह्मकल्पात्पूर्वं शिवगरुडपदयोग्ययोः । इन्द्रकामयोर्विंशतिब्रह्मकल्पात्पूर्वमपरोक्षज्ञानम् । सूर्यादीनान्तु दशब्रह्मकल्पात्पूर्वमपरोक्षज्ञानं जायते । अन्येषामेकब्रह्मकल्प एव ज्ञानं जायते । अपरोक्षज्ञानं च मानसम् । अणिमाद्यष्टैश्वर्यं च देवादीनामपरोक्षज्ञानजन्यम् ।

तमोयोग्यानां तु नापरोक्षम् । किन्तु द्वेषपरिपाक एव तमस्साधनम् । तत्साधनानि तु विषयलोलता त्रिविधगुरुद्वेषः नवविधहरिद्वेषः । एवं ज्ञानस्य परमात्माधीनत्वम् ॥

## अज्ञानप्रकरणम्

तथाऽज्ञानमपि परमात्माधीनम् ।

## बन्धप्रकरणम्

बन्धोऽपि जीवस्य परमात्माधीनः । बन्धास्तु ईश्वरेच्छाऽविद्या कामकर्म लिङ्गशरीरं त्रिगुणात्मकं मनः स्थूलशरीरमित्यादि । एवं च सृष्ट्यादयो बन्धान्ताः परमात्माधीनाः ।

## मोक्षप्रकरणम्

तन्मोक्षोऽपि परमात्माधीनः । तथाहि अपरोक्षज्ञानानन्तरं परमभक्तिर्जायते । ततोऽत्यर्थप्रसादः । तस्मात्प्रकृत्यविद्यादिभ्यो मोक्षः ।

स चतुर्विधः कर्मक्षयः उत्क्रान्तिः अर्चिरादिमार्गो भोगश्चेति । कर्मक्षयस्त्वपरोक्षज्ञाने जाते सञ्चितस्य सर्वस्यापि पापस्यानिष्टस्य पुण्यस्य च सर्वात्मना विनाशः । विनाशो नाम अनिष्टपुण्यस्य कस्यचित्सुहृभ्द्यो दानम् । पापस्य कस्यचिद्द्वेषिभ्यो दानम् । केषाञ्चित्स्वरूपत एव नाशः । प्रारब्धकर्मणस्तु भोगेनैव नाशः । ब्रह्मणः शतब्रह्मकल्पपर्यन्तं पुण्यं प्रारब्धफलस्य सत्यलोकाधिपत्यादेरनुभवः । गरुडशेषयोः पञ्चाशद्ब्रह्मकल्प-

पर्यन्तं पुण्यपापरूपप्रारब्धस्यानुभवः । इन्द्रकामयोर्विंशति-ब्रह्मकल्पपर्यन्तं पुण्यपापप्रारब्धानुभवः । सूर्यचन्द्रादीनां देवानां दशकल्पपर्यन्तं प्रारब्धानुभवः । अन्येषां मनुष्योत्तमानां त्वेकब्रह्मकल्पमात्र इति ।

प्रारब्धानुभवानन्तरं च ब्रह्मनाड्या देहादुत्क्रामन्ति । सुषुम्नानाडी ब्रह्मनाडी । सा मूलाधारमारभ्य मूर्धपर्यन्तमृजुरूपेण दीर्घ-शलाकावद्देहे वर्तते । सैव पञ्चभेदिनी ।

तथा ज्ञानिनो द्विविधाः । प्रतीकालम्बना अप्रतिकालम्बना-श्चेति। देहादिप्रतीकेऽपरोक्षज्ञानवन्तः प्रतीकालम्बनाः । तदन्यत्रापरोक्षज्ञानवन्तोऽप्रतीकालम्बनाः । अप्रतीकालम्बनानां देवादिव्यतिरिक्तानां केषाञ्चित्सुषुम्नानाडीमध्यादुत्क्रमणम् । तत्काले हृदयस्याग्रं प्रद्योतते । तत्प्रकाशितद्वारो निष्क्रामति । तदा प्राज्ञेनान्वारूढो भवति । तत्परमात्मनोऽग्रतो वायु-र्गच्छति। तथार्चिरादिमार्गेण गमनं भवति । तत्र तत्र लोकेषु पूजा च भवति । ततः क्रमेण वैकुण्ठलोकप्राप्तिः । तत्र तुरीयनामकभगवत्प्राप्तिश्च ।

प्रतीकालम्बनानां त्वन्तकाले नियमतो भगवत्स्मरणं जायते । सुषुम्नानाडीपार्श्वस्थनाड्या भगवत्प्रकाशयुक्तद्वारा गमनम् । अर्चिरादिलोकप्राप्तिः । क्रमेण वायुलोकप्राप्तिः । वायुलोक-प्राप्त्यनन्तरं च वायुरेव चतुर्मुखलोकं नयति । स च स्वशरीरलयानन्तरं वैकुण्ठं नयति ।

एवमेकगुणोपासकानामपरोक्षज्ञानानन्तरं न शरीरादुत्क्रमणम् ।

किन्तु शरीरस्य श्वैतीभावेनोच्छूनता जायते । ततः क्रमेण शरीरस्य विनाशः । तेषां च पृथिव्यादावेवावस्थानम् ।

सर्वेषामपि सत्यलोके चतुर्मुखोपदेशः । श्वेतद्वीपे वासुदेव-दर्शनम् । ध्रुवलोकस्थशिंशुमारदर्शनं च नियतम् ।

तमोयोग्यानामपि द्वेषपरिपाकानन्तरं देहादुत्क्रमणं भवति । सर्वेषां कलिप्राप्तिः । कलेस्तु ब्रह्मणा सह लिङ्गभङ्गो वायु-गदाप्रहाराद्भवति ।

नित्यसंसारिणामपि लिङ्गभङ्गः । अन्यथा तत्स्वरूपमात्रस्य कदाप्यनुभवाभावप्रसङ्गात् । साधनानुष्ठानवैयर्थ्यप्रसङ्गाच्च ।

जनलोकमारभ्योर्ध्वलोकं गतानां न पुनरावृत्तिः । देवादीनां तु नोत्क्रमणं न वार्चिरादिमार्गः । मानुषादिषु जातानां तूत्क्रमणं मार्गश्च भवति । तदा न मुक्तिः । किन्तूत्तमेषु देहलयानन्तरमेव ॥

देहलयक्रमस्तु मार्गौ द्वौ गरुडमार्गः शेषमार्गश्चेति । तत्र गरुडः सौपर्णी इन्द्रो गुरुः सूर्योऽग्निरिति गरुडमार्गः । शेषो वारुणी कामोऽनिरुद्धः सोमो वरुण इति शेषमार्गः । अग्नेः सूर्ये लयः सूर्यस्य गुरौ लयः गुरोरिन्द्रे लयः इन्द्रस्य सौपर्ण्यां लयः सौपर्ण्याश्च गरुडे लयः । एवं वरुणस्य सोमे लयः सोमस्यानिरुद्धे लयः अनिरुद्धस्य कामे लयः कामस्य वारुण्यां लयः वारुण्यास्तु शेषे लयः ।

अन्येषां तु केषाञ्चिद्गरुडमार्गे केषाञ्चिच्छेषमार्गे प्रवेशः । तथाहि भृग्वादीनां दक्षे लयः दक्षस्येन्द्रे लयः इति गरुडमार्गप्रवेशः ।

आकाशाभिमानिनो गणेशस्य पृथिव्यभिमानिन्या धरायाश्च गुरौ लय इति गरुडमार्गप्रवेशः । कर्मजदेवानां प्रियव्रतगययोश्च स्वायंभुवमनौ लयः स्वायंभुवमनोरिन्द्रे लयः मरुद्गणानां जयादीनामपीन्द्रे लयः यमस्य मनौ लयः निर्ऋतेश्च यमे लयः पितॄणां यमे लयः । अग्निपुत्राणामाजानजादीनामवशिष्टानां देवानां चाग्नौ लय इति गरुडमार्गप्रवेशः । गन्धर्वाणां कुबेरे लयः । कुबेरस्य सोमे लयः । सनकादीनां तु कामे लयः । विष्वक्सेनस्यानिरुद्धे लय इति शेषमार्गप्रवेशः । गरुडशेषयोश्च सरस्वत्यां लयः । सरस्वत्याश्चतुर्मुखे लयः । चतुर्मुखस्य लक्ष्मीद्वारा परमात्मनि लयः । उमायाः रुद्रे लयः । रुद्रस्य भारत्यां लयः । भारत्याश्च वायौ लयः । वायोश्च लक्ष्म्यां लयः।

तेषां तदा न मुक्तिः किन्त्वेतद्ब्रह्मकल्पानन्तरमेष्यत्कल्पे वायोर्ब्रह्मपदप्राप्तिः । भारती सरस्वती भविष्यति । रुद्रस्य शेषपदप्राप्तिः । उमा वारुणी भवष्यिति । इत्येवं वाय्वादिचतुर्णां ब्रह्मादिभावानन्तरं मुक्तिः ।

एवं लयानन्तरं चतुर्मुखदेहे प्रविष्टानामेतद्ब्रह्मकल्पे लिङ्गभङ्गयोग्यानां ब्रह्मणा सह विरजानदीस्नानेन लिङ्गभङ्गो जायते । विरजानदी च प्रधानाव्याकृताकाशयोर्मध्ये वर्तते । लक्ष्म्यात्मिका । लिङ्गशरीरं च दशेन्द्रियाणि सूक्ष्मरूपाणि पञ्चप्राणाः सूक्ष्मरूपाः मनश्च सूक्ष्मरूपं आहत्य षोडशकलोपेतम् । तस्य भङ्गो नाम जीवसम्बन्धनाशः । स्वरूपत एव नाश इति केचित् । प्रलयकाले सर्वेषां भगवदुदरे प्रवेशः । तदा न भोगः । किन्तु पुनःसृष्ट्यनन्तरं सृष्टिकाले भोगः ॥

तत्र भोगाश्चतुर्विधाः सालोक्यसामीप्यसारूप्यसायुज्यभोगवन्त इति । केचन भगवल्लोके यत्र कुत्रचित्स्थिता यथेष्टभोगवन्तः । केचन भगवत्समीपे यथेष्टभोगवन्तः । केचन चतुर्भुजाश्शंख-चक्राद्यायुधवन्तो यथेष्टभोगिनः । केचन भगवच्छरीरं प्रविश्य यथेष्टभोगवन्तः । एवं केचन क्षीरसागरगाः । केचनाश्वत्थ-वनगाः । केचनारण्याख्यसुधासमुद्रगाः । केचन बाह्योप-वनगाः । तत्र बहवो वृक्षाः । तेषु प्रतिशाखं धानापूपाः स्रवन्ति । तथा पायसकर्दमाः । मांसराशयश्च । तत्र तत्र मुक्तास्तत्तत्पदार्थभोगवन्तो भवन्ति । केचन स्त्रीभोगं कुर्वन्ति । केचन गजतुरगादीन् धावयन्ति । केचनदिव्याभरणादिमन्तः स्त्रीभिस्सह जलक्रीडां कुर्वन्ति । स्फटिकेन्द्रनीलमण्यादिनिर्मित-विचित्रसद्मप्रासादेषु रमन्ते । केचन ऋगादिवेदोच्चारणेन भगवन्तं स्तुवन्ति । केचन सुखोद्रेकेण हावु हावु इत्यादि-शब्दानुच्चरन्ति । केचन पूर्वाभ्यासवशेन यज्ञादिकं कुर्वन्ति । केचनाजन्ममरणं स्मृत्वा हर्षं प्राप्नुयुः । केचनेच्छामात्रेण पित्रादिदर्शनवन्तो भवन्ति । केचन सर्वलोकचारिणः । केचन शुद्धसत्त्वनिर्मितलीलाशरीराण्युपादाय क्रीडन्ते । केचन भगव-द्गुणकर्माणि गायन्ति । केचन नृत्यन्ति केचन वाद्यानि वादयन्ति ।

सर्वेऽपि तारतम्यवन्तः ईर्ष्यासूयादिदोषरहिता मोदन्ते । अपरोक्षज्ञानानन्तरमनुष्ठितकर्मोपासनादिवशादानन्दातिशयवन्तो भवन्ति । अन्यथा तदनुष्ठानवैयर्थ्यापातात् । अनुतिष्ठन्ति च रुद्रादयः । तथाहि लवणार्णवे रुद्रेण दशकल्पं तपश्चीर्णम् ।

शक्रेण कोटिवर्षं धूमः पीतः । सूर्येणायुतवर्षमर्वाक्शिरसा तपः कृतम् । आकाशशायिना धर्मेण सहस्रवर्षं मरीचयः पीताः । अत आनन्दातिशयः ।

स्वर्णकारः सुवर्णवत्परमात्मा मुक्तानां स्वेच्छयैव भोगार्थं कल्याणतमं महद्रूपं करोति । वैकुण्ठादौ विद्यमानाः सर्वेऽपि पदार्था लक्ष्म्याद्यात्मकाः ॥

मुक्तब्रह्मादीनां जगत्सृष्ट्यादिव्यापारो नास्ति । मुक्तस्वकीयावर-नियामकत्वं चास्त्येव । पुनस्संसारे नावर्तन्ते मुक्ताः ।

परमात्मा चात्र सकलभोगयुक्तः । मुक्तब्रह्मादिभिरीड्यमानो लक्ष्म्यात्मके विमिताख्ये पर्यंके शेते । तत्र प्रियकर्म गायती बहुधा विभूतिभिर्बहुमानं करोति महालक्ष्मीरित्यशेषमतिमङ्गलम् ॥

महानन्दतीर्थस्य ये भाष्यभावं मनोवाग्भिरावर्तयन्ते स्वशक्त्या ।
सुराद्या नरान्ता मुकुन्दप्रसादादिमं मोक्षमेते भजन्ते सदेति ॥

रघुनाथार्यशिष्येण पद्मनाभेन धीमता ।
कृतः पदार्थसंक्षेपोप्यनुगृह्णन्तु सूरयः ॥ १ ॥

॥ इति श्री वेदगर्भ पद्मनाभसूरिविरचितः पदार्थसङ्ग्रहः समाप्तः ॥

*श्रीकृष्णार्पणमस्तु*